# .. kalpokta navadurgApUjAvidhiH ..

# ॥ कल्पोक्त नवदुर्गापूजाविधिः ॥

Document Information



Text title : kalpokta navadurgaapuujaavidhiH

File name : kalpoktanavadurgaapuujaa.itx

Category : pUjA

Location : doc_devii

Author : Traditional

Language : Sanskrit

Subject : philosophy/hinduism/religion

Transliterated by : R. Harshananda harshanand_16 at rediffmail.com

Latest update : April 17, 2002

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



August 12, 2016

*sanskritdocuments.org*

# ॥ कल्पोक्त नवदुर्गापूजाविधिः ॥

जय जय शङ्कर !
ॐ श्री ललिता महात्रिपुरसुन्दरी पराभट्टारिका समेताय
श्री चन्द्रमौळीश्वर परब्रह्मणे नमः !

ॐ दुर्गा त्वार्या भगवती कुमारी अम्बिका तथा ।
महिषोन्मर्दिनी चैव चण्डिका च सरस्वती ।
वागीश्वरीति क्रमशः प्रोक्तास्तद्दिनदेवताः ॥

[ निर्णयसिन्धूदाहृतवचनैः अमावास्यासम्बन्ध
रहितायामुदयव्यापिन्यां आश्विनशुक्लप्रतिपदि नवरात्र
नवदुर्गा व्रतमारभेत् । तच्च नक्तव्रतत्वात् रात्रौ
कर्तव्यमित्येकः पक्षः । सम्प्रदायानुरोधेन व्यवस्था । ]

॥ प्रार्थना ॥

नवरात्रौ नक्तभोजी चरिष्येऽहं महेश्वरी ।
त्वत्प्रीत्यर्थं व्रतं देवि तदनुज्ञातुमर्हसि ॥

ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो
वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप
सुष्टुतैतु ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽंघ्रियुग्मं
स्मरामि ॥

सुमुहूर्तमस्तु । सुप्रतिष्ठितमस्तु । उत्तरे कर्मणि
नैर्विघ्न्यमस्तु ॥

करिष्यमाणस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं आदौ
गुरुपूजां गणपतिप्रार्थनां च करिष्ये ॥

॥ गुरुपूजा ॥

ॐ गुं गुरुभ्यो नमः । ॐ पं परमगुरुभ्यो नमः । ॐ पं
परमेष्ठिगुरुभ्यो नमः ॥

गोत्राचार्येभ्यो नमः । बादरायणाय नमः । श्री
शङ्करभगवत्पादाचार्याय नमः ॥

प्रार्थनां समर्पयामि ॥

॥ गणपति प्रार्थना ॥

ॐ गणानां त्वा गणपतिं हवामहे कविं
कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां
ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

विघ्नेश्वराय नमः ॥ श्री महागणपतये नमः ॥ प्रार्थनां
समर्पयामि । कर्मकाले नैर्विघ्न्यं कुरु ॥

॥ घन्टानादः ॥

ॐ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता
इमे ।
ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥

ॐ येभ्यो माता मधुमत्पिन्वते पयः पीयूषं
द्यौअदितिरद्रिबर्हाः ।
उक्तशुष्मान्वृषभरान्त्स्वप्नसस्ता आदित्या
अनुमदा स्वस्तये ॥

ॐ एवा पित्रे विश्वदेवाय वृष्णे
यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम
पतयोरयीणाम् ॥

ॐ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुर्वे घन्टारवं तत्र देवताह्वानलाञ्छनम् ॥ [ इति
घन्टानादं कृत्वा ]

॥ सङ्कल्पः : ॥

ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं ।

प्रसन्न वदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

[ देशकालादौ संकीर्त्य]
ममोपात्त समस्त दुरित क्षयद्वारा श्री दुर्गापरमेश्वरी
प्रीत्यर्थं सर्वापच्छान्तिपूर्वक
दीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसन्ततिवृद्धि
स्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं
यथासम्भवद्रव्यैः यावच्छक्ति ध्यानावाहनादि
षोडशोपचारपूजां करिष्ये ॥

॥ कलशपूजनम् ॥

तदङ्गत्वेन कलशपूजनं करिष्ये ॥

[ फलपुष्पपत्रादिना मण्टपमलङ्कृत्य तन्मध्ये
तण्डुलानि स्थापयेत् । तदुपरि चित्रवर्णेन अष्टदलपद्मं
लिखित्वा तन्मध्ये प्रक्षालितं
स्वर्णरजतताम्रमृण्मयाद्यन्यतमपात्रं धूपादिना विशोध्य
संस्थाप्य वस्त्रेणाऽऽच्छाद्य तत्कलशान्तराले पञ्चफल
पञ्चपल्लव स्वर्णरचित दुर्गा प्रतिमां गोधूम धान्योपरि
कलशे स्थापयेत् ]

ॐ मही द्यौः पृ॑थि॒वी च॑ न इ॒मं य॒ज्ञं
मि॑मिक्षताम् ।
पि॒पृतां नो॒ भरी॑मभिः ॥ [ भूमिं स्पृष्ट्वा ]

ॐ ओष॑दयः सं व॑दन्ते॒ सोमे॑न स॒ह राज्ञा॑ ।
यस्मै॑ कृ॒णोति॑ ब्राह्मणस्तं रा॑जन् पारयाम॑सि ॥

ॐ आ क॒लशे॑षु धावति श्ये॒नो वर्म॒ वि गा॑हते ।
अ॒भि द्रोणा॒ कनि॑क्रदत् ॥ [ इति कलशमभिमन्त्र्य ]

ॐ तन्तुं॑ त॒न्वन्रज॑सो भा॒नुमन्वि॑हि॒ ज्योति॑ष्मतः
प॒थो र॑क्ष धि॒या कृ॒तान् ।
अ॒नु॒ल्ब॒णं वय॑त॒ जोगु॑वा॒मपो॒ मनु॑र्भव

जनया दैव्यं जनम् ॥ [इति सूत्रं संवेष्ट्य

ॐ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं
सचता परुष्ण्या ।

असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये
श्रृणुह्या सुषोमया ॥ इति जलं सम्पूर्य

ॐ स हि रत्नानि दाशुषे सुवाति सविता भगः ।

तं भागं चित्रमीमहे ॥ इति पञ्चरत्नानि निधाय

ॐ अश्वत्थे वो निषदनं पर्णे वो
वसतिष्कृता ।

गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ इति
पल्लवान् निक्षिप्य

ॐ पूर्णा दर्वी परा पत सुपूर्णा पुनरापत ।

वस्नेव वि क्रीणावहा इषमूर्जँ शतक्रतो ॥

इति दर्वीं निक्षिप्य

ॐ याः फलिनीर्या अफला अपुष्पा याश्च
पुष्पिणीः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहसः ॥

इति फलं समर्प्य

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां
करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये
श्रियम् ॥ इति गन्धम् समर्प्य

ॐ अर्चत प्रार्चत प्रियमेधा सो अर्चत ।

अर्चन्तु पुत्रका उत पुरं न
धृष्ण्वर्चत ॥ इत्यक्षतान् निक्षिप्य

ॐ आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः ।
ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा
इमे ॥ इति पुष्पाणि समर्पयेत्

ॐ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि
पर्येषि विश्वतः ।

अतप्तनूर्न तदामो अश्नुते शृतास
इद्वहन्तस्तत्समाशत ॥ इति शिरःकूर्चं निधाय

ॐ तत्त्वायामीत्यस्य मन्त्रस्य शुनःशेप ऋषिः त्रिष्टुप् छन्दः
वरुणो देवता कलशे वरुणावाहने विनियोगः ॥

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते
यजमानोहविर्भिः ।

आहेळमानो वरुणेह बोध्युरुशम्समान आयुः
प्रमोषीः ॥ इति अभिमन्त्रयेत्

अस्मिन् कलशे ॐ भूः वरुणमावाहयामि । ॐ भुवः
वरुणमावाहयामि । ॐ स्वः वरुणमावाहयामि ।
ॐ भूर्भुवस्स्वः वरुणमावाहयामि ॥

कलशस्य मुखे विष्णुः कण्ठे रुद्राः समाश्रिताः । मूले तत्र
स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ
यजुर्वेदः सामवेदोप्यथर्वणः ॥

अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । अत्र
गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः । सर्वे समुद्राः
सरितस्तीर्थानि जलदा नदाः ॥

गङ्गे च यमुने चैव गोदावरी सरस्वती । नर्मदे सिन्धु
कावेरी जलेऽस्मिन् सन्निधिं कुरु ॥

सितमकरनिषण्णां शुभ्रवस्त्रां त्रिनेत्रां

करधृतकलशोद्यत्सूत्पलाभीत्यभीष्टाम् ।
विधिहरिहररूपां सेन्दुकोटीरचूडां भसितसितदुकूलां
जाह्नवीं तां नमामि ॥

कलशदेवताभ्यो नमः । प्रार्थनां समर्पयामि ॥

॥ शङ्ख पूजा ॥

[भूमिं प्रोक्ष्य शङ्खं प्रक्षाल्य संस्थाप्य ]

ॐ शं नो देवीरभीष्टय आपो भवन्तु पीतये ।

शं यो रभिस्रवन्तु नः ॥

[ इति मन्त्रेण जलं पूरयित्वा शङ्ख मुद्रां
धेनुमुद्रां च प्रदर्शयेत् ]

जातवेदस इत्यस्य मन्त्रस्य मारीचः कश्यप ऋषिः त्रिष्टुप्
चन्दः जातवेदाग्निर्देवता अग्निकलावाहने विनियोगः ॥

ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति
वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं
दुरितात्यग्निः ॥

ॐ भूः अग्निकलामावाहयामि । ॐ भुवः अग्निकलामावाहयामि ।
ॐ स्वः अग्निकलामावाहयामि ।
ॐ भूर्भुवस्स्वः अग्निकलामावाहयामि ॥

तत्सवितुरित्यस्य मन्त्रस्य विश्वामित्र ऋषिः दैवी गायत्री
छन्दः सविता देवता सौरकलावाहने विनियोगः ॥

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो
यो नः प्रचोदयात् ॥

ॐ भूः सौरकलामावाहयामि । ॐ भुवः
सौरकलामावाहयामि । ॐ स्वः सौरकलामावाहयामि ।
ॐ भूर्भुवस्स्वः सौरकलामावाहयामि ॥

त्र्यम्बकमिति मन्त्रस्य मैत्रावरुणिर्वसिष्ठ ऋषिः अनुष्टुप्

छन्दः त्र्यम्बक रुद्रो देवता अमृतकलावाहने विनियोगः ॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीय
मामृतात् ॥

ॐ भूः अमृतकलामावाहयामि । ॐ भुवः
अमृतकलामावाहयामि । ॐ स्वः अमृतकलामावाहयामि ।
ॐ भूर्भुवस्स्वः अमृतकलामावाहयामि ॥

ॐ पवनगर्भाय विद्महे पाञ्चजन्याय धीमहि तन्नः शङ्खः
प्रचोदयात् ॥

[ इति त्रिवारमर्घ्यम् ]

॥ अथ मण्टपध्यानम् ॥

उत्तप्तोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलम् ।
शुद्धस्फाटिकभित्तिका विरचितैः स्तम्भैश्च हैमैः
शुभैः ॥ द्वारैश्चामर रत्न राजिखचितैः
शोभावहैर्मण्डपैः । तत्रान्यैरपि चक्रशङ्खधवलैः
प्रोद्भासितं स्वस्तिकैः ॥

मुक्ताजालविलम्बिमण्टपयुतैर्वज्रैश्च सोपानकैः ।
नानारत्नविनिर्मितैश्च कलशैरत्यन्तशोभावहम् ॥

माणिक्योज्ज्वलदीपदीप्तिरचितं लक्ष्मीविलासास्पदम् ।
ध्यायेन्मण्टपमर्चनेषु सकलेष्वेवं विधं साधकः ॥

॥ द्वारपालक पूजा ॥

ॐ क्षेत्रपालाय नमः । ॐ सिंहाय नमः । ॐ गरुडाय नमः ।
ॐ द्वारश्रियै नमः । ॐ धात्र्यै नमः ।
ॐ विधात्र्यै नमः । ॐ पूर्वद्वारश्रियै नमः । शङ्खनिधये
नमः । पुष्पनिधये नमः । दक्षिणद्वारश्रियै नमः । बलायै
नमः । प्रबलायै नमः । प्रचण्डायै नमः । पश्चिम
द्वारश्रियै नमः । जयायै नमः । विजयायै नमः । गङ्गायै
नमः । यमुनायै नमः । उत्तरद्वारश्रियै नमः । ऋग्वेदाय

नमः । यजुर्वेदाय नमः । सामवेदाय नमः । अथर्वणवेदाय नमः । कृतयुगाय नमः । त्रेतायुगाय नमः । द्वापरयुगाय नमः । कलियुगाय नमः । पूर्वसमुद्राय नमः । दक्षिणसमुद्राय नमः । पश्चिमसमुद्राय नमः । उत्तरसमुद्राय नमः । द्वारदेवताभ्यो नमः । द्वारपालक पूजां समर्पयामि ॥

॥ पीठपूजा ॥

ॐ आधारशक्त्यै नमः । मूलप्रकृत्यै नमः । कूर्माय नमः । अनन्ताय नमः । वास्त्वधिपतये ब्रह्मणे नमः । वास्तुपुरुषाय नमः । श्वेत द्वीपाय नमः । स्वर्णमण्डपाय नमः । अमृतार्णवाय नमः । रत्नद्वीपाय नमः । नवरत्नमयमण्डपाय नमः । भद्रकमलासनायै नमः । गुणाधिपतये नमः । सरस्वत्यै नमः । दुर्गायै नमः । क्षेत्रपालाय नमः । धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । अधर्माय नमः । अज्ञानाय नमः । अवैराग्याय नमः । अनैश्वर्याय नमः । अव्यक्तविग्रहाय नमः । अनन्दकन्दाय नमः । आकाशबीजात्मने बुध्निनालाय नमः । आकाशात्मने कर्णिकायै नमः । वाय्वात्मने केसरेभ्यो नमः । अग्न्यात्मने दलेभ्यो नमः । पृथिव्यात्मने परिवेषाय नमः । अं अर्कमण्डलाय वसुप्रदद्वादशकलातत्वात्मने नमः । उं सोममण्डलाय वसुप्रदषोडशकलातत्वात्मने नमः । मं वह्निमण्डलाय वसुप्रददशकलातत्वात्मने नमः । सं सत्वाय नमः । रं रजसे नमः । तं तमसे नमः । विं विद्यायै नमः । आं आत्मने नमः । उं परमात्मने नमः । मं अन्तरात्मने नमः । ॐ ह्रीं ज्ञानत्मने नमः । पीठपूजां समर्पयामि ॥

॥ आवाहनम् ॥

जातवेदस इत्यस्य मन्त्रस्य कश्यप ऋषिः त्रिष्टुप् छन्दः जातवेदाग्निर्देवता दुर्गावाहने विनियोगः ॥

ॐ जा॒तवे॑दसे सुनवा॒म सोम॑मरातीय॒तो नि द॑हाति॒

वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं
दुरितात्यग्निः ॥

ॐ भूः दुर्गामावाहयामि । ॐ भुवः दुर्गामावाहयामि । ॐ
स्वः दुर्गामावाहयामि ।
ॐ भूर्भुवस्स्वः दुर्गामावाहयामि ॥

स्वामिन्यखिललोकेशी यावत्पूजावसानकम् । तावत्त्वं
प्रीतिभावेन बिम्बेऽस्मिन् सन्निधिं कुरु ॥

॥ मलापकर्षणस्नानम् ॥

ॐ अग्निमीळेत्यस्य सूक्तस्य वैश्वामित्रोमधुच्छन्दा ऋषिः
गायत्री छन्दः अग्निर्देवता ॥

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स
देवाꣳ एह वक्षति ॥

अग्निना रयिमश्नवत् पोषमेव दिवे दिवे ।
यशसं वीरवत्तमम् ॥

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स
इद्देवेषु गच्छति ॥

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो
देवेभिरागमत् ॥

श्री दुर्गापरमेश्वर्यै नमः । मलापकर्षणस्नानं
समर्पयामि ॥

॥ नवशक्ति पूजा ॥

ॐ प्रभायै नमः । मायायै नमः । जयायै नमः । सूक्ष्मायै
नमः । विशुद्धायै नमः । नन्दिन्यै नमः । सुप्रभायै नमः ।
विजयायै नमः । सर्वसिद्धिप्रदायै नमः ॥

ॐ नमो भगवत्यै सकलगुणशक्तियुक्तायै
योगपद्मपीठात्मिकायै नमः । सुवर्ण महापीठं कल्पयामि ॥

स्वात्मसंस्थामजां शुद्धां त्वामद्य परमेश्वरी ।
अरण्यामिह हव्याशं मूर्तावावाहयाम्यहम् ॥

ॐ आं ह्रीं क्रों यरलवशषसहोऽ सं हंसः श्री
दुर्गापरमेश्वर्याः प्राणाः इह प्राणाः ।
ॐ आं ह्रीं क्रों यरलवशषसहोऽ सं हंसः श्री
दुर्गापरमेश्वर्याः जीव इह स्थितः ।
ॐ आं ह्रीं क्रों यरलवशषसहोऽ सं हंसः श्री
दुर्गापरमेश्वर्याः सर्वेन्द्रियाणि इह स्थितानि ।
पृथिव्यप्तेजोवाय्वाकाश
शब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राण
वाक्पाणिपादपायूपस्थवचनादानविहरणविसर्गानन्द
मनोबुद्धिचित्ताहङ्कारज्ञानात्मने अन्तरात्मने परमात्मने
नमः ॥ इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥

ॐ अ॒सुनी॑ते॒ पुन॑र॒स्मासु॒ चक्षुः॒ पुनः॑ प्रा॒णमि॒ह
नो॑ धे॒हि भोग॑म् ।
ज्योक् प॑श्येम॒ सूर्य॑मु॒च्चर॑न्त॒मनुमते मृ॒ळया॑ नः
स्व॒स्ति ॥

ॐ भूर्भुवस्स्वरोऽम् । सशक्तिसाङ्गसायुधसवाहनसपरिवारे
दुर्गे भगवति अत्रैवाऽगच्छाऽगच्छ आवाहयिष्ये
आवाहयामि ॥

आवाहिता भव । संस्थापिता भव । सन्निहिता भव ।
सन्निरुद्धा भव । सम्मुखा भव । अवकुन्ठितो भव । व्याप्ता
भव । सुप्रसन्ना भव । मम सर्वाभीष्ट फलप्रदा भव ॥

[ तद्दिनस्य दुर्गायाः मूलमन्त्रस्य ऋष्यादि न्यासं
विधाय ध्यात्वा मूलमन्त्रं यथा शक्ति जपेत् ]

श्री दुर्गापरमेश्वर्यै नमः । ध्यायामि ध्यानं

समर्पयामि । आवाहयामि आवाहनं समर्पयामि । अर्घ्यं
समर्पयामि । पाद्यं समर्पयामि । आचमनं समर्पयामि ।
मधुपर्कं समर्पयामि । गन्धं समर्पयामि । पुष्पं
समर्पयामि । [ इत्यादि संक्षिप्त धूप दीप नैवेद्य
नीराजनादिकं कुर्यात् ]

॥ पञ्चामृतस्नानम् ॥

क्षीरस्नानम्

ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् ।
भवा वाजस्य सङ्गथे ॥

श्री दुर्गापरमेश्वर्यै नमः क्षीरस्नानं समर्पयामि ॥

क्षीरस्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति
वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं
दुरितात्यग्निः ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

दधिस्नानम्

ॐ दधिक्राव्णो अकारिषं
जिष्णोरश्वस्यवाजिनः।सुरभि नो मुखाकरत्प्रण
आयूंषि तारिषत्।

श्री दुर्गापरमेश्वर्यै नमः दधिस्नानं समर्पयामि ॥

दधिस्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं
कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि
तरसे नमः ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

घृतस्नानम्

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते
श्रितो घृतम्वस्यधाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं
वृषभ वक्षिहव्यम् ॥

श्री दुर्गापरमेश्वर्यै नमः घृतस्नानं समर्पयामि ॥

घृतस्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ अग्ने त्वं पारया नव्यो अस्मान् स्वस्तिभिरति
दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय
तनयाय शं योः ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

मधुस्नानम्

ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ।
मधुनक्तमुतोषसि । मधुमत् पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

श्री दुर्गापरमेश्वर्यै नमः मधुस्नानं समर्पयामि ॥

मधुस्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा
दुरितातिपर्षि ।
अग्नेऽ अत्रिवन्नमसा गृणानोऽऽस्माकं बोध्य विता

तनूनाम् ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

शर्करास्नानम्

ॐ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय
सुहवीतुनाम्ने ।

स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये
मधुमाँ अदाभ्यः ॥

श्री दुर्गापरमेश्वर्यै नमः शर्करास्नानं समर्पयामि ॥

शर्करास्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ पृतना जितगं सहमानमुग्रमग्निं हुवेम
परमात्सधस्तात् ।

स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवोऽति
दुरितात्यग्निः ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

फलोदकस्नानम्

ॐ याः फलिनीर्या अफला अपुष्पा याश्च
पुष्पिणीः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहसः ॥

श्री दुर्गापरमेश्वर्यै नमः फलोदकस्नानं समर्पयामि ॥

फलोदकस्नानानन्तरं शुद्धोदकेन स्नपयिष्ये ॥

ॐ आपोहिष्ठा मयोभुवस्तानऊर्जे दधातन ।
महेरणाय चक्षसे यो वः शिवतमो रसः ।

तस्य भाजयते हनः उशतीरिव मातरः ।
तस्मा अरङ्गमामवः ।

यस्यक्षयाय जिन्वथ आपो जनयथा च नः ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

अमृताभिषेकम्

[ श्रीसूक्त- दुर्गा सूक्त - रुद्राद्यैः अमृताभिषेकं
कुर्यात् ]
श्री दुर्गापरमेश्वर्यै नमः अमृताभिषेकस्नानं
समर्पयामि ॥

॥ कल्पोक्त
षोडशोपचार पूजा ॥

ध्यानम्
ॐ दुर्गां भगवतीं ध्यायेन्मूलमन्त्राधिदेवताम् । वाणीं
लक्ष्मीं महादेवीं महामायां विचिन्तयेत् ।
माहिषघ्नीइं दशभुजां कुमारीं सिंहवाहिनीम् ।
दानवास्तर्जयन्ती च सर्वकामदुघां शिवाम् ॥

श्री दुर्गापरमेश्वर्यै नमः ध्यायामि ध्यानं समर्पयामि ॥

आवाहनम्
ॐ वाक् श्रीदुर्गादिरूपेण विश्वमावृत्य तिष्ठति ।
आवाहयामि त्वां देवि सम्यक् सन्निहिता भव ॥

श्री दुर्गापरमेश्वर्यै नमः आवाहयामि आवाहनं
समर्पयामि ॥

आसनम्
ॐ भद्रकालि नमस्तेऽस्तु भक्तानामीप्सितार्थदे ।
स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यताम् ॥

श्री दुर्गापरमेश्वर्यै नमः आसनं समर्पयामि ॥

स्वागतम्
ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । कृताञ्जलिपुटो
भक्त्या स्वागतं कल्पयाम्यहम् ॥

श्री दुर्गापरमेश्वर्यै नमः स्वागतं समर्पयामि ॥

अर्घ्यम्

ॐ महालक्ष्मि महामये महाविद्या स्वरूपिणी ।
अर्घ्यपाद्याचमान् देवि गृहाण परमेश्वरी ॥

श्री दुर्गापरमेश्वर्यै नमः अर्घ्य-पाद्य-आचमनानि
समर्पयामि ॥

मधुपर्कम्
ॐ दूर्वाङ्कुरसमायुक्तं गन्धादिसुमनोहरम् । मधुपर्कं
मया दत्तं नारायणि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः मधुपर्कं समर्पयामि ॥

पञ्चामृतस्नानम्
ॐ स्नानं पञ्चामृतं देवि भद्रकालि जगन्मयि । भक्त्या
निवेदितं तुभ्यं विश्वेश्वरि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः पञ्चामृतस्नानं
समर्पयामि ॥

शुद्धोदकस्नानम्
ॐ शुद्धोदकसमायुक्तं गङ्गासलिलमुत्तमम् । स्नानं गृहाण
देवेशि भद्रकालि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः शुद्धोदकस्नानं समर्पयामि ॥

वस्त्रम्
ॐ वस्त्रं गृहाण देवेशि देवाङ्गसदृशं नवम् ।
विश्वेश्वरि महामाये नारायणि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः रत्नदुकूलवस्त्रं समर्पयामि ॥

कञ्चुकम्
ॐ गोदावरि नमस्तुभ्यं सर्वाभीष्टप्रदायिनि ।
सर्वलक्षणसंभूते दुर्गे देवि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः रत्नकञ्चुकं समर्पयामि ॥

यज्ञोपवीतम्
ॐ तक्षकानन्तकर्कोट नागयज्ञोपवीतिनि । सौवर्णं
यज्ञसूत्रं ते ददामि हरिसेविते ॥

श्री दुर्गापरमेश्वर्यै नमः स्वर्णयज्ञोपवीतं समर्पयामि ॥

आभरणम्
ॐ नानारत्नविचित्राढ्यान् वलयान् सुमनोहरान् । अलङ्कारान्
गृहाण त्वं ममाभीष्टप्रदा भव॥

श्री दुर्गापरमेश्वर्यै नमः आभरणानि समर्पयामि ॥

गन्धः
ॐ गन्धं चन्दनसंयुक्तं कुङ्कुमादिविमिश्रितम् । गृह्णीष्व
देवि लोकेशि जगन्मातर्नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः गन्धं समर्पयामि ॥

बिल्वगन्धः
ॐ बिल्ववृक्षकृतावासे बिल्वपत्रप्रिये शुभे ।
बिल्ववृक्षसमुद्भूतो गन्धश्च प्रतिगृह्यताम् ॥

श्री दुर्गापरमेश्वर्यै नमः बिल्वगन्धं समर्पयामि ॥

अक्षताः
ॐ अक्षतान् शुभदान् देवि हरिद्राचूर्णमिश्रितान् ।
प्रतिगृह्णीष्व कौमारि दुर्गादेवि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः अक्षतान् समर्पयामि ॥

पुष्पाणि
ॐ मालतीबिल्वमन्दारकुन्दजातिविमिश्रितम् । पुष्पं गृहाण
देवेशि सर्वमङ्गलदा भव ॥

शिवपत्नि शिवे देवि शिवभक्तभयापहे । द्रोणपुष्पं मया
दत्तं गृहाण शिवदा भव ॥

श्री दुर्गापरमेश्वर्यै नमः नानाविध परिमळ पत्रपुष्पाणि
समर्पयामि ॥

॥ अथ अङ्गपूजा ॥

ॐ वाराह्यै नमः पादौ पूजयामि ।
ॐ चामुण्डायै नमः जङ्घे पूजयामि ।
ॐ माहेन्द्र्यै नमः जानुनी पूजयामि ।

ॐ वागीश्वर्यै नमः ऊरू पूजयामि ।
ॐ ब्रह्माण्यै नमः गुह्यं पूजयामि ।
ॐ कालरात्र्यै नमः कटिं पूजयामि ।
ॐ जगन्मायायै नमः नाभिं पूजयामि ।
ॐ माहेश्वर्यै नमः कुक्षिं पूजयामि ।
ॐ सरस्वत्यै नमः हृदयं पूजयामि ।
ॐ कात्यायन्यै नमः कण्ठं पूजयामि ।
ॐ शिवदूत्यै नमः हस्तान् पूजयामि ।
ॐ नारसिंह्यै नमः बाहून् पूजयामि ।
ॐ इन्द्राण्यै नमः मुखं पूजयामि ।
ॐ शिवायै नमः नासिकां पूजयामि ।
ॐ शताक्ष्यै नमः कर्णौ पूजयामि ।
ॐ त्रिपुरहंत्र्यै नमः नेत्रत्रयं पूजयामि ।
ॐ परमेश्वर्यै नमः ललाटं पूजयामि ।
ॐ शाकम्भर्यै नमः शिरः पूजयामि ।
ॐ कौशिक्यै नमः सर्वाणि अङ्गानि पूजयामि ॥

॥ अथ आवरण पूजा ॥

प्रथमावरणम्
[तद्दिनदुर्गायः अङ्गन्यासमन्त्राद्यैः
प्रथमावरणमाचरेत् ]

द्वितीयावरणम्
ॐ जयायै नमः ।
ॐ विजयायै नमः ।
ॐ कीर्त्यै नमः ।
ॐ प्रीत्यै नमः ।
ॐ प्रभायै नमः ।
ॐ श्रद्धायै नमः ।
ॐ मेधायै नमः ।
ॐ सरस्वत्यै नमः ।
ॐ श्रुत्यै नमः ।

तृतीयावणम्
ॐ चक्राय नमः ।
ॐ शङ्खाय नमः ।
ॐ गदायै नमः ।
ॐ खड्गाय नमः ।
ॐ पाशाय नमः ।
ॐ अङ्कुशाय नमः ।
ॐ शराय नमः ।
ॐ धनुषे नमः ।

तुरीयावरणम्
ॐ इन्द्राय सुराधिपतये पीतवर्णाय वज्रहस्ताय ऐरावतवाहनाय शचीसहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ अग्नये तेजोऽधिपतये पिङ्गलवर्णाय शक्तिहस्ताय मेषवाहनाय स्वाहादेवीसहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ यमाय प्रेताधिपतये कृष्णवर्णाय दण्डहस्ताय महिषवाहनाय इलासहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ निर्ऋतये रक्षोऽधिपतये रक्तवर्णाय खड्गहस्ताय नरवाहनाय कालिकासहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ वरुणाय जलाधिपतये श्वेतवर्णाय पाशहस्ताय मकरवाहनाय पद्मिनीसहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ वायवे प्राणाधिपतये धूम्रवर्णाय अङ्कुशहस्ताय मृगवाहनाय मोहिनीसहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ सोमाय नक्षत्राधिपतये श्यामलवर्णाय गदाहस्ताय अश्ववाहनाय चित्रिणीसहिताय सशक्तिसाङ्गसायुध सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।

ॐ ईशानाय विद्याधिपतये स्फटिकवर्णाय त्रिशूलहस्ताय
वृषभवाहनाय गौरीसहिताय सशक्तिसाङ्गसायुध
सवाहन सपरिवाराय श्री दुर्गापार्षदाय नमः ।
ॐ ब्रह्मणे लोकाधिपतये हिरण्यवर्णाय पद्महस्ताय
हंसवाहनाय वाणीसहिताय सशक्तिसाङ्गसायुध सवाहन
सपरिवाराय श्री दुर्गापार्षदाय नमः ।

पञ्चमावरणम्
ॐ वज्राय नमः ।
ॐ शक्त्यै नमः ।
ॐ दण्डाय नमः ।
ॐ खड्गाय नमः ।
ॐ पाशाय नमः ।
ॐ अङ्कुशाय नमः ।
ॐ गदायै नमः ।
ॐ शूलाय नमः ।
ॐ चक्राय नमः ।
ॐ पद्माय नमः ।

बिल्वपत्रम्
ॐ श्रीवृक्षममृतोद्भूतं महादेवी प्रियं सदा ।
बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरी ॥

श्री दुर्गापरमेश्वर्यै नमः बिल्वपत्रं समर्पयामि ॥

॥ अथ पुष्पपूजा ॥

ॐ दुर्गायै नमः तुलसी पुष्पं समर्पयामि
ॐ कात्यायन्यै नमः चम्पकपुष्पं समर्पयामि
ॐ कौमार्यै नमः जाती पुष्पं समर्पयामि
ॐ काल्यै नमः केतकी पुष्पं समर्पयामि
ॐ गौर्यै नमः करवीरपुष्पं समर्पयामि
ॐ लक्ष्म्यै नमः उत्पलपुष्पं समर्पयामि
ॐ सर्वमङ्गलायै नमः मल्लिकापुष्पं समर्पयामि
ॐ इन्द्राण्यै नमः यूथिकापुष्पं समर्पयामि

ॐ सरस्वत्यै नमः कमलपुष्पं समर्पयामि
ॐ श्री भगवत्यै नमः सर्वाणि पुष्पाणि समर्पयामि ॥

॥ अथ चतुःषष्टियोगिनी पूजा ॥

[ सर्वादौ ॐकारं योजयेत् ]
ॐ दिव्ययोगायै नमः ।
महायोगायै नमः ।
सिद्धयोगायै नमः ।
गणेश्वर्यै नमः ।
प्रेताश्यै नमः ।
डाकिन्यै नमः ।
काल्यै नमः ।
कालरात्र्यै नमः ।
निशाचर्यै नमः ।
झङ्कार्यै नमः ।
ऊर्ध्वभेताल्यै नमः ।
पिशाच्यै नमः ।
भूतडामर्यै नमः ।
ऊर्ध्वकेश्यै नमः ।
विरूपाक्ष्यै नमः ।
शुश्काङ्ग्यै नमः ।
नरभोजिन्यै नमः ।
राक्षस्यै नमः ।
घोररक्ताक्ष्यै नमः ।
विश्वरूप्यै नमः ।
भयङ्कर्यै नमः ।
भ्रामर्यै नमः ।
रुद्रभेताल्यै नमः ।
भीष्मर्यै नमः ।
त्रिपुरान्तक्यै नमः ।
भैरव्यै नमः ।
ध्वंसिन्यै नमः ।

क्रोध्यै नमः ।
दुर्मुख्यै नमः ।
प्रेतवाहिन्यै नमः ।
खट्वाङ्ग्यै नमः ।
दीर्घलम्बोष्ठ्यै नमः ।
मालिन्यै नमः ।
मन्त्रयोगिन्यै नमः ।
कौशिक्यै नमः ।
मर्दिन्यै नमः ।
यक्ष्यै नमः ।
रोमजङ्घायै नमः ।
प्रहारिण्यै नमः ।
कालाग्नये नमः ।
ग्रामण्यै नमः ।
चक्र्यै नमः ।
कङ्काल्यै नमः ।
भुवनेश्वर्यै नमः ।
यमदूत्यै नमः ।
फट्कार्यै नमः ।
वीरभद्रेश्यै नमः ।
धूम्राक्ष्यै नमः ।
कलहप्रियायै नमः ।
कण्टक्यै नमः ।
नाटक्यै नमः ।
मार्यै नमः ।
करालिन्यै नमः ।
सहस्राक्ष्यै नमः ।
कामलोलायै नमः ।
काकदंष्ट्रायै नमः ।
अधोमुख्यै नमः ।
धूर्जट्यै नमः ।
विकट्यै नमः ।

घोर्यै नमः ।
कपाल्यै नमः ।
विषलङ्घिन्यै नमः ॥ ॐ ॥

॥ अथ आश्टभैरवपूजा ॥

ॐ असिताङ्गभैरवाय नमः ।
ॐ क्रोधभैरवाय नमः ।
ॐ रुरुभैरवाय नमः ।
ॐ चण्डभैरवाय नमः ।
ॐ कपालभैरवाय नमः ।
ॐ खट्वाङ्गभैरवाय नमः ।
ॐ उन्मत्तभैरवाय नमः ।
ॐ भीषणभैरवाय नमः ।

॥ अथ अष्टोत्तरशतनाम पूजा ॥

[ अत्र तद्दिनदुर्गायाः नामावलीं स्मरेत् ]

॥ अथ धूपः ॥

ॐ सगुग्गुल्वगरूशीर गन्धादि सुमनोहरम् । धूपं गृहाण
देवेशि दुर्गे देवि नमोऽस्तुते ॥

श्री दुर्गापरमेश्वर्यै नमः धूपमाघ्रापयामि ॥

॥ अथ दीपः ॥

ॐ पट्टसूत्रोल्लसद्वर्ति गोघृतेन समन्वितम् । दीपं
ज्ञानप्रदं देवि गृहाण परमेश्वरी ॥

श्री दुर्गापरमेश्वर्यै नमः दीपं दर्शयामि ॥

॥ अथ नैवेद्यम् ॥

ॐ जुषाण देवि नैवेद्यं नानाभक्ष्यैः समन्वितम् ।
परमान्नं मया दत्तं सर्वाभीष्टं प्रयच्छ मे ॥

श्री दुर्गापरमेश्वर्यै नमः महानैवेद्यं समर्पयामि ॥

॥ अथ पानीयम् ॥

ॐ गङ्गादिसलिलोद्भूतं पानीयं पावनं शुभम् ।
स्वादूदकं मया दत्तं गृहाण परमेश्वरी ॥

श्री दुर्गापरमेश्वर्यै नमः अमृतपानीयं समर्पयामि ॥

॥ अथ ताम्बूलम् ॥

ॐ पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

श्री दुर्गापरमेश्वर्यै नमः ताम्बूलं समर्पयामि ॥

॥ अथ नीराजनम् ॥

ॐ पट्टिसूत्रविचित्राढ्यैः प्रभामण्डलमण्डितैः ।
दीपैर्नीराजये देवीं प्रणवाद्यैश्च नामभिः ॥

श्री दुर्गापरमेश्वर्यै नमः दिव्यमङ्गलनीराजनं
समर्पयामि ॥

॥ अथ मन्त्रपुष्पम् ॥

ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा
चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा
परमे व्योमन् ॥

ॐ राजाधिराजाय प्रसह्यसाहिने नमो वयं
वैश्रवणाय कुर्महे ।

समेकामान्कामकामाय मह्यं कामेश्वरो
वैश्रवणो ददातु ।

कुबेराय वैश्रवणाय महाराजाय नमः ॥

ॐ गन्धपुष्पाक्षतैर्युक्तमञ्जलीकरपूरकैः । महालक्ष्मि
नमस्तेऽस्तु मन्त्रपुष्पं गृहाण भो ॥

श्री दुर्गापरमेश्वर्यै नमः वेदोक्त मन्त्रपुष्पं
समर्पयामि ॥

॥ अथ प्रदक्षिणनमस्कारः ॥

ॐ महादुर्गे नमस्तेऽस्तु सर्वेष्टफलदायिनि । प्रदक्षिणां
करोमि त्वां प्रीयतां शिववल्लभे ॥

श्री दुर्गापरमेश्वर्यै नमः प्रदक्षिणनमस्कारान्
समर्पयामि ॥

॥ अथ प्रार्थना ॥

ॐ जय रुद्रे विरूपाक्षि जयातीते निरञ्जनी । जय
कल्याणसुखदे जय मङ्गलदे शुभे ॥

जय सिद्धमुनीन्द्रादि वन्दितांघ्रिसरोरुहे । जय विष्णुप्रिये
देवि जय भूतविभूतिदे ॥

जय रत्नप्रदीप्ताभे जय हेमविभासिते । जय बालेन्दुतिलके
त्र्यम्बके जय वृद्धिदे ॥

सर्वलक्ष्मीप्रदे देवि सर्वरक्षाप्रदा भव ।
धर्मार्थकाममोक्षाख्य चतुर्वर्गफलप्रदे ॥

शैलपुत्रि नमस्तेऽस्तु ब्रह्मचारिणि ते नमः । कालरात्रि
नमस्तेऽस्तु नारायणि नमोऽस्तुते ॥

मधुकैटभहारिण्यै नमो महिषमर्दिनी । धूम्रलोचननिर्नाशे
चण्डमुण्डविनाशिनि ॥

रक्तबीजवधे देवि निशुम्भासुरघातिनी । नमः ।
शुम्भापहारिण्यै त्र्यैलोक्यवरदे नमः ॥

देवि देहि परं रूपं देवि देहि परं सुखम् । धर्मं देहि
धनं देहि सर्वकामांश्च देहि मे ॥

सुपुत्रांश्च पशून् कोशान् सुक्षेत्राणि सुखानि च । देवि देहि
परं ज्ञानमिह मुक्ति सुखं कुरु ॥

श्री दुर्गापरमेश्वर्यै नमः प्रार्थनां समर्पयामि ॥

॥ अथ प्रसन्नार्घ्यम् ॥

ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । बिल्वार्घ्यं च मया दत्तं देवेशि प्रतिगृह्यताम् ॥

ज्ञानेश्वरि गृहाणेदं सर्वसौख्यविवर्धिनि ।
गृहाणार्घ्यं मया दत्तं देवेशि वरदा भव ॥

श्री दुर्गापरमेश्वर्यै नमः बिल्वपत्रार्घ्यं समर्पयामि ॥

॥ अथ पुनः पूजा ॥

ॐ कात्यायन्यै नमः ध्यानं समर्पयामि
ॐ कौमार्यै नमः आवाहनं समर्पयामि
ॐ विन्ध्यवासिन्यै नमः आसनं समर्पयामि
ॐ महेश्वर्यै नमः पाद्यं समर्पयामि
ॐ सिताम्भोजायै नमः अर्घ्यं समर्पयामि
ॐ नारसिंह्यै नमः आचमनीयं समर्पयामि
ॐ महादेव्यै नमः मधुपर्कं समर्पयामि
ॐ दयावत्यै नमः पुनराचमनीयं समर्पयामि
ॐ शाकंभर्यै नमः स्नानं समर्पयामि
ॐ दुर्गायै नमः वस्त्रं समर्पयामि
ॐ सरस्वत्यै नमः आभरणानि समर्पयामि
ॐ मेधायै नमः गन्धं समर्पयामि
ॐ सर्वविद्याप्रदायै नमः अक्षतान् समर्पयामि
ॐ सर्वसिद्धिप्रदायै नमः पुष्पाणि समर्पयामि
ॐ महाविद्यायै नमः धूपं समर्पयामि
ॐ सपत्निकायै नमः दीपं समर्पयामि
ॐ शान्त्यै नमः नैवेद्यं समर्पयामि
ॐ उमायै नमः हस्तप्रक्षाळनं समर्पयामि
ॐ चण्डिकायै नमः ताम्बूलं समर्पयामि
ॐ चामुण्डायै नमः नीराजनं समर्पयामि
ॐ माहाकाल्यै नमः मन्त्रपुष्पं समर्पयामि
ॐ शिवदूत्यै नमः प्रदक्षिणानि समर्पयामि
ॐ शिवायै नमः नमस्कारान् समर्पयामि

श्री दुर्गा परमेश्वर्यै नमः षोडशोपचार पूजां
समर्पयामि ॥

॥ अथ बिल्वपत्रार्पणम् ॥

ॐ सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीः सरस्वती।
श्रीलक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥

सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये
त्र्यम्बिके गौरि नारायणि नमोऽस्तुते ॥

श्री दुर्गा परमेश्वर्यै नमः बिलवपत्रार्चनं
समर्पयामि ॥

॥ अथ पूजा समर्पणम् ॥

ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वरी ।
यत्कृतं तु मया देवि परिपूर्णं तदस्तु ते ॥

अनेन मया कृत दुर्गापूजाख्य कर्मणा श्री परमेश्वरो श्री
परदेवता च प्रीयताम् ॥

[ यथाशक्ति ब्राह्मण-दम्पति-कुमारी वर्गभोजनं
कारयेत् ]
॥ इति दुर्गापूजाविधिः सम्पूर्णः ॥

॥ प्रथम दिनस्य महादुर्गा पूजाविधिः ॥

अस्यश्री मूलदुर्गा महामन्त्रस्य नारद ऋषिः गायत्री
छन्दः श्री दुर्गा देवता ॥

[ ह्रां ह्रीं इत्यादिना न्यासमाचरेत् ]
ध्यानम्
शङ्खारिचापशरभिन्नकरां त्रिनेत्रां
तिग्मेतरांशुकलयां विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनतां च दुर्गां दूर्वानिभां
दुरितवर्गहरां नमामि ॥

मन्त्रः ॐ ह्रीं दुं दुर्गायै नमः ॥

॥ अथ श्री दुर्गाऽष्टोत्तरशतनामावलिः ॥

अस्यश्री दुर्गाऽष्टोत्तरशतनाम महामन्त्रस्य नारद ऋषिः
गायत्री छन्दः श्री दुर्गा देवता परमेश्वरीति बीजं
कृष्णानुजेति शक्तिः शाङ्करीति कीलकं
दुर्गाप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ध्यानम्
प्रकाशमध्यस्थितचित्स्वरूपां वराभये संदधतीं
त्रिनेत्राम् ।
सिन्दूरवर्णामतिकोमलाङ्गीं मायामयीं तत्वमयीं नमामि ॥

ॐ दुर्गायै नमः ।
दारिद्र्यशमन्यै नमः ।
दुरितघ्न्यै नमः ।
लक्ष्म्यै नमः ।
लज्जायै नमः ।
महाविद्यायै नमः ।
श्रद्धायै नमः ।
पुष्ट्यै नमः ।
स्वधायै नमः ।
ध्रुवायै नमः ।
महारात्र्यै नमः ।
महामायायै नमः ।
मेधायै नमः ।
मात्रे नमः ।
सरस्वत्यै नमः ।
शिवायै नमः ।
शशिधरायै नमः ।
शान्तायै नमः ।
शाम्भव्यै नमः ।
भूतिदायिन्यै नमः ।
तामस्यै नमः ।
नियतायै नमः ।

नार्यै नमः ।
काल्यै नमः ।
नारायण्यै नमः ।
कलायै नमः ।
ब्राह्म्यै नमः ।
वीणाधरायै नमः ।
वाण्यै नमः ।
शारदायै नमः ।
हंसवाहिन्यै नमः ।
त्रिशूलिन्यै नमः ।
त्रिनेत्रायै नमः ।
ईशानायै नमः ।
त्रय्यै नमः ।
त्रयतमायै नमः ।
शुभायै नमः ।
शङ्खिन्यै नमः ।
चक्रिण्यै नमः ।
घोरायै नमः ।
कराल्यै नमः ।
मालिन्यै नमः ।
मत्यै नमः ।
माहेश्वर्यै नमः ।
महेष्वासायै नमः ।
महिषघ्न्यै नमः ।
मधुव्रतायै नमः ।
मयूरवाहिन्यै नमः ।
नीलायै नमः ।
भारत्यै नमः ।
भास्वराम्बरायै नमः ।
पीताम्बरधरायै नमः ।
पीतायै नमः ।
कौमार्यै नमः ।

पीवरस्तन्यै नमः ।
रजन्यै नमः ।
राधिन्यै नमः ।
रक्तायै नमः ।
गदिन्यै नमः ।
घण्टिन्यै नमः ।
प्रभायै नमः ।
शुम्भघ्न्यै नमः ।
सुभगायै नमः ।
सुभ्रुवे नमः ।
निशुम्भप्राणहारिण्यै नमः ।
कामाक्ष्यै नमः ।
कामुकायै नमः ।
कन्यायै नमः ।
रक्तबीजनिपातिन्यै नमः ।
सहस्रवदनायै नमः ।
सन्ध्यायै नमः ।
साक्षिण्यै नमः ।
शाङ्कर्यै नमः ।
द्युतये नमः ।
भार्गव्यै नमः ।
वारुण्यै नमः ।
विद्यायै नमः ।
धरायै नमः ।
धरासुरार्चितायै नमः ।
गायत्र्यै नमः ।
गायक्यै नमः ।
गङ्गायै नमः ।
दुर्गायै नमः ।
गीतघनस्वनायै नमः ।
छन्दोमयायै नमः ।
मह्यै नमः ।

छायायै नमः ।
चार्वाङ्ग्यै नमः ।
चन्दनप्रियायै नमः ।
जनन्यै नमः ।
जाह्नव्यै नमः ।
जातायै नमः ।
शान्ङ्कर्यै नमः ।
हतराक्षस्यै नमः ।
वल्लर्यै नमः ।
वल्लभायै नमः ।
वल्ल्यै नमः ।
वल्ल्यलङ्कृतमध्यमायै नमः ।
हरीतक्यै नमः ।
हयारूढायै नमः ।
भूत्यै नमः ।
हरिहरप्रियायै नमः ।
वज्रहस्तायै नमः ।
वरारोहायै नमः ।
सर्वसिद्ध्यै नमः ।
वरप्रदायै नमः ।
श्री दुर्गादेव्यै नमः ॥ ॐ ॥

॥ अथ द्वितीयदिनस्य आर्या पूजाविधिः ॥

अस्यश्री आर्यामहामन्त्रस्य मारीच काश्यप ऋषिः त्रिष्टुप्
छन्दः श्री आर्या दुर्गा देवता ॥

[ ॐ जातवेदसे सुनवाम - सोममरातीयतः - निदहाति
वेदः - सनः पर्षदति - दुर्गाणि विश्वा - नावेव सिन्धुं
दुरितात्यग्निः ॥ एवं न्यासमाचरेत् ]
ध्यानम्
विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणाम्
कन्याभिः करवालखेटविलसत् हस्ताभिरासेविताम् ।
हस्तैश्चक्रगदाऽसिशङ्ख विशिखांश्चापं गुणं

तर्जनीम्
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

मन्त्रः- ॐ जातवेदसे सुनवाम सोममरातीयतः निदहाति
वेदः सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं
दुरितात्यग्निः ॥

॥ अथ आर्या नामावलिः ॥

ॐ आर्यायै नमः ।
कात्यायन्यै नमः ।
गौर्यै नमः ।
कुमार्यै नमः ।
विन्ध्यवासिन्यै नमः ।
वागीश्वर्यै नमः ।
महादेव्यै नमः ।
काल्यै नमः ।
कङ्कालधारिण्यै नमः ।
घोणसाभरणायै नमः ।
उग्रायै नमः ।
स्थूलजङ्घायै नमः ।
महेश्वर्यै नमः ।
खट्वाङ्गधारिण्यै नमः ।
चण्ड्यै नमः ।
भीषणायै नमः ।
महिषान्तकायै नमः ।
रक्षिण्तै नमः ।
रमण्यै नमः ।
राज्ञ्यै नमः ।
रजन्यै नमः ।
शोषिण्यै नमः ।
रत्यै नमः ।
गभस्तिन्यै नमः ।
गन्धिन्यै नमः ।

दुर्गायै नमः ।
गान्धार्यै नमः ।
कलहप्रियायै नमः ।
विकराल्यै नमः ।
महाकाल्यै नमः ।
भद्रकाल्यै नमः ।
तरङ्गिण्यै नमः ।
मालिन्यै नमः ।
दाहिन्यै नमः ।
कृष्णायै नमः ।
छेदिन्यै नमः ।
भेदिन्यै नमः ।
अग्रण्यै नमः ।
ग्रामण्यै नमः ।
निद्रायै नमः ।
विमानिन्यै नमः ।
शीघ्रगामिन्यै नमः ।
चण्डवेगायै नमः ।
महानादायै नमः ।
वज्रिण्यै नमः ।
भद्रायै नमः ।
प्रजेश्वर्यै नमः ।
कराल्यै नमः ।
भैरव्यै नमः ।
रौद्र्यै नमः ।
अट्टहासिन्यै नमः ।
कपालिन्यै व्चामुण्डायै नमः ।
रक्तचामुण्डायै नमः ।
अघोरायै नमः ।
घोररूपिण्यै नमः ।
विरूपायै नमः ।
महारूपायै नमः ।

स्वरूपायै नमः ।
सुप्रतेजस्विन्यै नमः ।
अजायै नमः ।
विजयायै नमः ।
चित्रायै नमः ।
अजितायै नमः ।
अपराजितायै नमः ।
धरण्यै नमः ।
धात्र्यै नमः ।
पवमान्यै नमः ।
वसुन्धरायै नमः ।
सुवर्णायै नमः ।
रक्ताक्ष्यै नमः ।
कपर्दिन्यै नमः ।
सिंहवाहिन्यै नमः ।
कद्रवे नमः ।
विजितायै नमः ।
सत्यवाण्यै नमः ।
अरुन्धत्यै नमः ।
कौशिक्यै नमः ।
महालक्ष्म्यै नमः ।
विद्यायै नमः ।
मेधायै नमः ।
सरस्वत्यै नमः ।
मेधायै नमः ।
त्र्यम्बकायै नमः ।
त्रिसन्ख्यायै नमः ।
त्रिमूर्त्यै नमः ।
त्रिपुरान्तकायै नमः ।
ब्राह्म्यै नमः ।
नारसिंह्यै नमः ।
वाराह्यै नमः ।

इन्द्राण्यै नमः ।
वेदमातृकायै नमः ।
पार्वत्यै नमः ।
तामस्यै नमः ।
सिद्धायै नमः ।
गुह्यायै नमः ।
इज्यायै नमः ।
उषायै नमः ।
उमायै नमः ।
अम्बिकायै नमः ।
भ्रामर्यै नमः ।
वीरायै नमः ।
हाहाहुङ्कारनादिन्यै नमः ।
नारायण्यै नमः ।
विश्वरूपायै नमः ।
मेरुमन्दिरवासिन्यै नमः ।
शरणागतदीनार्तपरित्राणपरायणायै नमः ।
आर्यायै नमः ॥ॐ॥

॥अथ तृतीयदिनस्य भगवती पूजाविधिः ॥

ॐ अस्यश्री भगवती महामन्त्रस्य दीर्घतमा ऋषिः ककुप्
छन्दः भगवती शूलिनी दुर्गा देवता ॥

[ॐ शूलिनि दुर्गे देवतासुरपूजिते नन्दिनि महायोगेश्वरि
हुं फट् - शूलिनि वरदे - विन्ध्यवासिनि - असुरमर्दिनि -
देवासुरसिद्धपूजिते - युद्धप्रिये - ] इति न्यासमाचरेत् ॥

ध्यानम्
बिभ्राणा शूलबाणास्यरिसुदरगदाचापपाशान् कराब्जैः
मेघश्यामा किरीटोल्लिखितजलधरा भीषणा भूषणाढ्या ।
सिम्हस्कन्धाधिरूढा चतुसृभिरसिखेटान्विताभिः परीता
कन्याभिः भिन्नदैत्या भवतु भवभयद्ध्वम्सिनी शूलिनी नः ॥

मन्त्रः - ॐ शूलिनि दुर्गे वरदे विन्ध्यवासिनि असुरमर्दिनि

देवासुरसिद्धपूजिते युद्धप्रिये नन्दिनि रक्ष रक्ष
महायोगेश्वरि हुं फट् ॥

॥अथ भगवती नामावलिः ॥

ॐ भगवत्यै नमः ।
गौर्यै नमः ।
सुवर्णवर्णायै नमः ।
सृष्टिस्थितिसंहारकारिण्यै नमः ।
एकस्वरूपिण्यै नमः ।
अनेकस्वरूपिण्यै नमः ।
महेज्यायै नमः ।
शतबाहवे नमः ।
महाभुजायै नमः ।
भुजङ्गभूषणायै नमः ।
षट्चक्रवासिन्यै नमः ।
षट्चक्रभेदिन्यै नमः ।
श्यामायै नमः ।
कायस्थायै नमः ।
कायवर्जितायै नमः ।
सुस्थितायै नमः ।
सुमुख्यै नमः ।
क्षमायै नमः ।
मूलप्रकृत्यै नमः ।
ईश्वर्यै नमः ।
अजायै नमः ।
शुभ्रवर्णायै नमः ।
पुरुषार्थायै नमः ।
सुप्रबोधिन्यै नमः ।
रक्तायै नमः ।
नीलायै नमः ।
श्यामलायै नमः ।
कृष्णायै नमः ।

पीतायै नमः ।
कर्बुरायै नमः ।
करुणालयायै नमः ।
तृष्णायै नमः ।
जरायै नमः ।
वृद्धायै नमः ।
तरुण्यै नमः ।
करुणायै नमः ।
लयायै नमः ।
कलायै नमः ।
काष्ठायै नमः ।
मुहूर्तायै नमः ।
निमिषायै नमः ।
कालरूपिण्यै नमः ।
सुवर्णायै नमः ।
रसनायै नमः ।
चक्षुःस्पर्शवायुरसायै नमः ।
गन्धप्रियायै नमः ।
सुगन्धायै नमः ।
सुस्पर्शायै नमः ।
मनोगतायै नमः ।
मृगनाभ्यै नमः ।
मृगाक्ष्यै नमः ।
कर्पूरामोददायिन्यै नमः ।
पद्मयोन्यै नमः ।
सुकेशायै नमः ।
सुलिङ्गायै नमः ।
भगरूपिण्यै नमः ।
भूषण्यै नमः ।
योनिमुद्रायै नमः ।
खेचर्यै नमः ।
स्वर्गगामिन्यै नमः ।

मधुप्रियायै नमः ।
माधव्यै नमः ।
वल्ल्यै नमः ।
मधुमत्तायै नमः ।
मदोत्कटायै नमः ।
मातङ्ग्यै नमः ।
शुकहस्तायै नमः ।
धीरायै नमः ।
महाश्वेतायै नमः ।
वसुप्रियायै नमः ।
सुवर्णिन्यै नमः ।
पद्महस्तायै नमः ।
मुक्तायै नमः ।
हारविभूषणायै नमः ।
कर्पूरामोदायै नमः ।
निःश्वासायै नमः ।
पद्मिन्यै नमः ।
वल्लभायै नमः ।
शक्त्यै नमः ।
खड्गिन्यै नमः ।
बलहस्तायै नमः ।
भुषुण्डिपरिघायुधायै नमः ।
चापिन्यै नमः ।
चापहस्तायै नमः ।
त्रिशूलधारिण्यै नमः ।
शूरबाणायै नमः ।
शक्तिहस्तायै नमः ।
मयूरवाहिन्यै नमः ।
वरायुधायै नमः ।
धारायै नमः ।
धीरायै नमः ।
वीरपाण्यै नमः ।

वसुधारायै नमः ।
जयायै नमः ।
शाकनायै नमः ।
विजयायै नमः ।
शिवायै नमः ।
श्रियै नमः ।
भगवत्यै नमः ।
महालक्ष्म्यै नमः ।
सिद्धसेनान्यै नमः ।
आर्यायै नमः ।
मन्दरवासिन्यै नमः ।
कुमार्यै नमः ।
काल्यै नमः ।
कपाल्यै नमः ।
कपिलायै नमः ।
कृष्णायै नमः ॥ॐ॥

॥अथ चतुर्थ दिनस्य कुमारी पूजनविधिः ॥

ॐ अस्यश्री कुमारी महामन्त्रस्य ईश्वर ऋषिः बृहती
छन्दः कुमारी दुर्गा देवता ॥

[ह्रां ह्रीं इत्यादिना न्यासमाचरेत् ]

ध्यानम्
गिरिराजकुमारिकां भवानीं शरणागतपालनैकदक्षाम् ।
वरदाभयचक्रशङ्खहस्तां वरदात्रीं भजतां स्मरामि
नित्यम् ॥

मन्त्रः - ॐ ह्रीं कुमार्यै नमः ॥

॥अथ श्री कुमार्याः नामावलिः॥

ॐ कौमार्यै नमः ।
सत्यमार्गप्रबोधिन्यै नमः ।
कम्बुग्रीवायै नमः ।

वसुमत्यै नमः ।
छत्रच्छायायै नमः ।
कृतालयायै नमः ।
कुण्डलिन्यै नमः ।
जगद्धात्र्यै नमः ।
जगद्गर्भायै नमः ।
भुजङ्गायै नमः ।
कालशायिन्यै नमः ।
प्रोल्लसायाइ नमः ।
सप्तपद्मायै नमः ।
नाभिनालायै नमः ।
मृणालिन्यै नमः ।
मूलाधारायै नमः ।
अनिलाधारायै नमः ।
वह्निकुण्डलकृतालयायै नमः ।
वायुकुण्डलसुखासनायै नमः ।
निराधारायै नमः ।
निराश्रयायै नमः ।
बलीन्द्रसमुच्चयायै नमः ।
षड्रसस्वादुलोलुपायै नमः ।
श्वासोच्छ्वासगतायै नमः ।
जीवायै ब्ग्राहिण्यै नमः ।
वह्निसंश्रयायै नमः ।
तप्सविन्यै नमः ।
तपस्सिद्धायै नमः ।
तापसायै नमः ।
तपोनिष्ठायै नमः ।
तपोयुक्तायै नमः ।
तपस्सिद्धिदायिन्यै नमः ।
सप्तधातुमय्यै नमः ।
सुमूर्त्यै नमः ।
सप्तायै नमः ।

अनन्तरनाडिकायै नमः ।
देहपुष्ट्यै नमः ।
मनस्तुष्ट्यै नमः ।
रत्नतुष्ट्यै नमः ।
मदोद्धतायै नमः ।
दशमध्यै नमः ।
वैद्यमात्रे नमः ।
द्रवशक्त्यै नमः ।
प्रभाविन्यै नमः ।
वैद्यविद्यायै नमः ।
चिकित्सायै नमः ।
सुपथ्यायै नमः ।
रोगनाशिन्यै नमः ।
मृगयात्रायै नमः ।
मृगमाम्सायै नमः ।
मृगपद्यायै नमः ।
सुलोचनायै नमः ।
व्याघ्रचर्मणे नमः ।
बन्धुरूपायै नमः ।
बहुरूपायै नमः ।
मदोत्कटायै नमः ।
बन्धिन्यै नमः ।
बन्धुस्तुतिकरायै नमः ।
बन्धायै नमः ।
बन्धविमोचिन्यै नमः ।
श्रीबलायै नमः ।
कलभायै नमः ।
विद्युल्लतायै नमः ।
दृढविमोचिन्यै नमः ।
अम्बिकायै नमः ।
बालिकायै नमः ।
अम्बरायै नमः ।

मुख्यायै नमः ।
साधुजनार्चितायै नमः ।
कालिन्यै नमः ।
कुलविद्यायै नमः ।
सुकलायै नमः ।
कुलपूजितायै नमः ।
कुलचक्रप्रभायै नमः ।
भ्रान्तायै नमः ।
भ्रमनाशिन्यै नमः ।
वात्यालिन्यै नमः ।
सुवृष्ट्यै नमः ।
भिक्षुकायै नमः ।
सस्यवर्धिन्यै नमः ।
अकारायै नमः ।
इकारायै नमः ।
उकारायै नमः ।
एकारायै नमः ।
हुङ्कारायै नमः ।
बीजरूपयै नमः ।
क्लींकारायै नमः ।
अम्बरधारिण्यै नमः ।
सर्वाक्षरमयाशक्त्यै नमः ।
राक्षसार्णवमालिन्यै नमः ।
सिन्धूरवर्णायै नमः ।
अरुणवर्णायै नमः ।
सिन्धूरतिलकप्रियायै नमः ।
वश्यायै नमः ।
वश्यबीजायै नमः ।
लोकवश्यविधायिन्यै नमः ।
नृपवश्यायै नमः ।
नृपसेव्यायै नमः ।
नृपवश्यकरप्रियायै नमः ।

महिषीनृपमाम्सायै नमः ।
नृपज्ञायै नमः ।
नृपनन्दिन्यै नमः ।
नृपधर्मविद्यायै नमः ।
धनधान्यविवर्धिन्यै नमः ।
चतुर्वर्णमयशक्त्यै नमः ।
चतुर्वर्णैः सुपूजितायै नमः ।
सर्ववर्णमयायै नमः ॥ॐ॥

॥अथ पञ्चमदिनस्य अम्बिका पूजाविधिः॥

ॐ अस्यश्री अम्बिकामहामन्त्रस्य मार्कण्डेय ऋषिः उष्णिक् छन्दः
अम्बिका दुर्गा देवता ॥

[ श्रां - श्रीं इत्यादिना न्यासमाचरेत् ]
ध्यानम्
या सा पद्मासनस्था विपुलकटतटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥

मन्त्रः - ॐ ह्रीं श्रीं अम्बिकायै नमः ॐ ॥

॥अथ श्री अम्बिकायाः नामावलिः ॥

ॐ अम्बिकायै नमः ।
सिद्धेश्वर्यै नमः ।
चतुराश्रमवाण्यै नमः ।
ब्राह्मण्यै नमः ।
क्षत्रियायै नमः ।
वैश्यायै नमः ।
शूद्रायै नमः ।
वेदमार्गरतायै नमः ।
वज्रायै नमः ।
वेदविश्वविभागिन्यै नमः ।
अस्त्रशस्त्रमयायै नमः ।

वीर्यवत्यै नमः ।
वरशस्त्रधारिण्यै नमः ।
सुमेधसे नमः ।
भद्रकाल्यै नमः ।
अपराजितायै नमः ।
गायत्र्यै नमः ।
संकृत्यै नमः ।
सन्ध्यायै नमः ।
सावित्र्यै नमः ।
त्रिपदाश्रयायै नमः ।
त्रिसन्ध्यायै नमः ।
त्रिपद्यै नमः ।
धात्र्यै नमः ।
सुपथायै नमः ।
सामगायन्त्यै नमः ।
पाञ्चाल्यै नमः ।
कालिकायै नमः ।
बालायै नमः ।
बालक्रीडायै नमः ।
सनातन्यै नमः ।
गर्भाधारायै नमः ।
आधारशून्यायै नमः ।
जलाशयनिवासिन्यै नमः ।
सुरारिघातिन्यै नमः ।
कृत्यायै नमः ।
पूतनायै नमः ।
चरितोत्तमायै नमः ।
लज्जारसवत्यै नमः ।
नन्दायै नमः ।
भवायै नमः ।
पापनाशिन्यै नमः ।
पीतम्बरधरायै नमः ।

गीतसङ्गीतायै नमः ।
गानगोचरायै नमः ।
सप्तस्वरमयायै नमः ।
षड्जमध्यमधैवतायै नमः ।
मुख्यग्रामसंस्थितायै नमः ।
स्वस्थायै नमः ।
स्वस्थानवासिन्यै नमः ।
आनन्दनादिन्यै नमः ।
प्रोतायै नमः ।
प्रेतालयनिवासिन्यै नमः ।
गीतनृत्यप्रियायै नमः ।
कामिन्यै नमः ।
तुष्टिदायिन्यै नमः ।
पुष्टिदायै नमः ।
निष्ठायै नमः ।
सत्यप्रियायै नमः ।
प्रज्ञायै नमः ।
लोकेशायै नमः ।
संशोभनायै नमः ।
संविषयायै नमः ।
ज्वालिन्यै नमः ।
ज्वालायै नमः ।
विमूर्त्यै नमः ।
विषनाशिन्यै नमः ।
विषनागदम्न्यै नमः ।
कुरुकुल्लायै नमः ।
अमृतोद्भवायै नमः ।
भूतभीतिहरायै नमः ।
रक्षायै नमः ।
राक्षस्यै नमः ।
रात्र्यै नमः ।
दीर्घनिद्रायै नमः ।

दिवागतायै नमः ।
चन्द्रिकायै नमः ।
चन्द्रकान्त्यै नमः ।
सूर्यकान्त्यै नमः ।
निशाचरायै नमः ।
डाकिन्यै नमः ।
शाकिन्यै नमः ।
हाकिन्यै नमः ।
चक्रवासिन्यै नमः ।
सीतायै नमः ।
सीतप्रियायै नमः ।
शान्तायै नमः ।
सकलायै नमः ।
वनदेवतायै नमः ।
गुरुरूपधारिण्यै नमः ।
गोष्ठ्यै नमः ।
मृत्युमारणायै नमः ।
शारदायै नमः ।
महामायायै नमः ।
विनिद्रायै नमः ।
चन्द्रधरायै नमः ।
मृत्युविनाशिन्यै नमः ।
चन्द्रमण्डलसङ्काशायै नमः ।
चन्द्रमण्डलवर्तिन्यै नमः ।
अणिमाद्यै नमः ।
गुणोपेतायै नमः ।
कामरूपिण्यै नमः ।
कान्त्यै नमः ।
श्रद्धायै नमः ।
श्रीमहालक्ष्म्यै नमः ॥ॐ॥

॥अथ षष्ठ दिनस्य महिषमर्दिनी

वनदुर्गा पूजाविधिः॥

ॐ अस्यश्री महिषमर्दिनि वनदुर्गा महामन्त्रस्य आरण्यक ऋषिः अनुष्टुप् छन्दः श्री महिषासुरमर्दिनी वनदुर्गा देवता ॥

[ ॐ उत्तिष्ठ पुरुषि - किं स्वपिषि - भयं मे समुपस्थितं - यदि शक्यं अशक्यं वा - तन्मे भगवति - शमय स्वाहा ] एवं न्यासमाचरेत् ॥

ध्यानम्
हेमप्रख्यामिन्दुखण्डात्ममौलीं शङ्खारीष्टाभीतिहस्तां त्रिनेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि ॥

॥अथ श्री देव्याः नामावलिः॥

ॐ महिषमर्दिन्यै नमः ।
श्रीदेव्यै नमः ।
जगदात्मशक्त्यै नमः ।
देवगणशक्त्यै नमः ।
समूहमूर्त्यै नमः ।
अम्बिकायै नमः ।
अखिलजनपरिपालकायै नमः ।
महिषपूजितायै नमः ।
भक्तिगम्यायै नमः ।
विश्वायै नमः ।
प्रभासिन्यै नमः ।
भगवत्यै नमः ।
अनन्तमूर्त्यै नमः ।
चण्डिकायै नमः ।
जगत्परिपालिकायै नमः ।
अशुभनाशिन्यै नमः ।

शुभमतायै नमः ।
श्रियै नमः ।
सुकृत्यै नमः ।
लक्ष्म्यै नमः ।
पापनाशिन्यै नमः ।
बुद्धिरूपिण्यै नमः ।
श्रद्धारूपिण्यै नमः ।
कालरूपिण्यै नमः ।
लज्जारूपिण्यै नमः ।
अचिन्त्यरूपिण्यै नमः ।
अतिवीरायै नमः ।
असुरक्षयकारिण्यै नमः ।
भूमिरक्षिण्यै नमः ।
अपरिचितायै नमः ।
अद्भुतरूपिण्यै नमः ।
सर्वदेवतास्वरूपिण्यै नमः ।
जगदंशोद्भूतायै नमः ।
असत्कृतायै नमः ।
परमप्रकृत्यै नमः ।
समस्तसुमतस्वरूपायै नमः ।
तृप्त्यै नमः ।
सकलमुखस्वरूपिण्यै नमः ।
शब्दक्रियायै नमः ।
आनन्दसन्दोहायै नमः ।
विपुलायै नमः ।
ऋज्यजुस्सामाथर्वरूपिण्यै नमः ।
उद्गीतायै नमः ।
रम्यायै नमः ।
पदस्वरूपिण्यै नमः ।
पाठस्वरूपिण्यै नमः ।
मेधादेव्यै नमः ।
विदितायै नमः ।

अखिलशास्त्रसारायै नमः ।
दुर्गायै नमः ।
दुर्गाश्रयायै नमः ।
भवसागरनाशिन्यै नमः ।
कैटभहारिण्यै नमः ।
हृदयवासिन्यै नमः ।
गौर्यै नमः ।
शशिमौलिकृतप्रतिष्ठायै नमः ।
ईशत्सुहासायै नमः ।
अमलायै नमः ।
पूर्णचन्द्रमुख्यै नमः ।
कनकोत्तमकान्त्यै नमः ।
कान्तायै नमः ।
अत्यद्भुतायै नमः ।
प्रणतायै नमः ।
अतिरौद्रायै नमः ।
महिषासुरनाशिन्यै नमः ।
दृष्टायै नमः ।
भ्रुकुटीकरालायै नमः ।
शशाङ्कधरायै नमः ।
महिषप्राणविमोचनायै नमः ।
कुपितायै नमः ।
अन्तकस्वरूपिण्यै नमः ।
सद्योविनाशिकायै नमः ।
कोपवत्यै नमः ।
दारिद्र्यनाशिन्यै नमः ।
पापनाशिन्यै नमः ।
सहस्रभुजायै नमः ।
सहस्राक्ष्यै नमः ।
सहस्रपदायै नमः ।
श्रुत्यै नमः ।
रत्यै नमः ।

रमण्यै नमः ।
भक्त्यै नमः ।
भवसागरतारिकायै नमः ।
पुरुषोत्तमवल्लभायै नमः ।
भृगुनन्दिन्यै नमः ।
स्थूलजङ्घायै नमः ।
रक्तपादायै नमः ।
नागकुण्डलधारिण्यै नमः ।
सर्वभूषणायै नमः ।
कामेश्वर्यै नमः ।
कल्पवृक्षायै नमः ।
कस्तूरिधारिण्यै नमः ।
मन्दस्मितायै नमः ।
मदोदयायै नमः ।
सदानन्दस्वरूपिण्यै नमः ।
विरिञ्चिपूजितायै नमः ।
गोविन्दपूजितायै नमः ।
पुरन्दरपूजितायै नमः ।
महेश्वरपूजितायै नमः ।
किरीटधारिण्यै नमः ।
मणिनूपुरशोभितायै नमः ।
पाशाङ्कुशधरायै नमः ।
कमलधारिण्यै नमः ।
हरिचन्दनायै नमः ।
कस्तूरीकुङ्कुमायै नमः ।
अशोकभूषणायै नमः ।
शृङ्गारलास्यायै नमः ॥ॐ॥

॥अथ सप्तमदिनस्य चण्डिका पूजाविधिः॥

ॐ अस्यश्री महाचण्डी महामन्त्रस्य दीर्घतमा ऋषिः ककुप्
छन्दः श्री महाचण्डिका दुर्गा देवता ॥

[ ह्रां - ह्रीं इत्यादिना न्यासमाचरेत् ]

ध्यानम्
शशलाञ्छनसम्युतां त्रिनेत्रां
वरचक्राभयशङ्खशूलपाणिम् ।
असिखेटकधारिणीं महेशीं त्रिपुरारातिवधूं शिवां
स्मरामि ॥

मन्त्रः - ॐ ह्रीं श्र्यूं मं दुं दुर्गायै नमः ॐ ॥

॥अथ महाचण्डी नामावलिः॥

ॐ चण्डिकायै नमः ।
मङ्गलायै नमः ।
सुशीलायै नमः ।
परमार्थप्रबोधिन्यै नमः ।
दक्षिणायै नमः ।
दक्षिणामूर्त्यै नमः ।
सुदक्षिणायै नमः ।
हविःप्रियायै नमः ।
योगिन्यै नमः ।
योगाङ्गायै नमः ।
धनुःशालिन्यै नमः ।
योगपीठधरायै नमः ।
मुक्तायै नमः ।
मुक्तानां परमा गत्यै नमः ।
नारसिम्ह्यै नमः ।
सुजन्मने नमः ।
मोक्षदायै नमः ।
दूत्यै नमः ।
साक्षिण्यै नमः ।
दक्षायै नमः ।
दक्षिणायै नमः ।
सुदक्षायै नमः ।
कोटिरूपिण्यै नमः ।
क्रतुस्वरूपिण्यै नमः ।

कात्यायन्यै नमः ।
स्वस्थायै नमः ।
कविप्रियायै नमः ।
सत्यग्रामायै नमः ।
बहिःस्थितायै नमः ।
काव्यशक्त्यै नमः ।
काव्यप्रदायै नमः ।
मेनापुत्र्यै नमः ।
सत्यायै नमः ।
परित्रातायै नमः ।
मैनाकभगिन्यै नमः ।
सौदामिन्यै नमः ।
सदामायायै नमः ।
सुभगायै नमः ।
कृत्तिकायै नमः ।
कालशायिन्यै नमः ।
रक्तबीजवधायै नमः ।
दृप्तायै नमः ।
सन्तपायै नमः ।
बीजसन्तत्यै नमः ।
जगज्जीवायै नमः ।
जगद्बीजायै नमः ।
जगत्त्रयहितैषिण्यै नमः ।
स्वामिकरायै नमः ।
चन्द्रिकायै नमः ।
चन्द्रायै नमः ।
साक्षात्स्वरूपिण्यै नमः ।
षोडशकलायै नमः ।
एकपादायै नमः ।
अनुबन्धायै नमः ।
यक्षिण्यै नमः ।
धनदार्चितायै नमः ।

चित्रिण्यै नमः ।
चित्रमायायै नमः ।
विचित्रायै नमः ।
भुवनेश्वर्यै नमः ।
चामुण्डायै नमः ।
मुण्डहस्तायै नमः ।
चण्डमुण्डवधायै नमः ।
उद्धतायै नमः ।
अष्टम्यै नमः ।
एकादश्यै नमः ।
पूर्णायै नमः ।
नवम्यै नमः ।
चतुर्दश्यै नमः ।
अमावास्यै नमः ।
कलशहस्तायै नमः ।
पूर्णकुम्भधरायै नमः ।
धरित्र्यै नमः ।
अभिरामायै नमः ।
भैरव्यै नमः ।
गम्भीरायै नमः ।
भीमायै नमः ।
त्रिपुरभैरव्यै नमः ।
महचण्डायै नमः ।
महामुद्रायै नमः ।
महाभैरवपूजितायै नमः ।
अस्थिमालाधारिण्यै नमः ।
करालदर्शनायै नमः ।
कराल्यै नमः ।
घोरघर्घरनाशिन्यै नमः ।
रक्तदन्त्यै नमः ।
ऊर्ध्वकेशायै नमः ।
बन्धूककुसुमाक्षतायै नमः ।

कदम्बायै नमः ।
पलाशायै नमः ।
कुङ्कुमप्रियायै नमः ।
कान्त्यै नमः ।
बहुसुवर्णायै नमः ।
मातङ्ग्यै नमः ।
वरारोहायै नमः ।
मत्तमातङ्गगामिन्यै नमः ।
हम्सगतायै नमः ।
हम्सिन्यै नमः ।
हम्सोज्वलायै नमः ।
शङ्खचक्राङ्कितकरायै नमः ।
कुमार्यै नमः ।
कुटिलालकायै नमः ।
मृगेन्द्रवाहिन्यै नमः ।
देव्यै नमः ।
दुर्गायै नमः ।
वर्धिन्यै नमः ।
श्रीमहालक्ष्म्यै नमः ॥ॐ॥

॥अथ अष्टम दिनस्य सरस्वतीपूजा
विधिः ॥

ॐ अस्यश्री मातृकासरस्वती महामन्त्रस्य शब्द ऋषिः
लिपिगायत्री छन्दः श्री मातृका सरस्वती देवता ॥

ध्यानम्
पञ्चाषद्वर्णभेदैर्विहितवदनदोष्पादहृत्कुक्षिवक्षोदेशां
भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां
पद्मसंस्थां
अच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

मन्त्रः - अं आं इं ईं ........................ ळं

क्षं

॥अथ नामावलिः॥

ॐ सरस्वत्यै नमः ।
भगवत्यै नमः ।
कुरुक्षेत्रवासिन्यै नमः ।
अवन्तिकायै नमः ।
काश्यै नमः ।
मधुरायै नमः ।
स्वरमयायै नमः ।
अयोध्यायै नमः ।
द्वारकायै नमः ।
त्रिमेधायै नमः ।
कोशस्थायै नमः ।
कोशवासिन्यै नमः ।
कौशिक्यै नमः ।
शुभवार्तायै नमः ।
कौशाम्बरायै नमः ।
कोशवर्धिन्यै नमः ।
पद्मकोशायै नमः ।
कुसुमावासायै नमः ।
कुसुमप्रियायै नमः ।
तरलायै नमः ।
वर्तुलायै नमः ।
कोटिरूपायै नमः ।
कोटिस्थायै नमः ।
कोराश्रयायै नमः ।
स्वायम्भव्यै नमः ।
सुरूपायै नमः ।
स्मृतिरूपायै नमः ।
रूपवर्धनायै नमः ।
तेजस्विन्यै नमः ।

सुभिक्षायै नमः ।
बलायै नमः ।
बलदायिन्यै नमः ।
महाकौशिक्यै नमः ।
महागर्तायै नमः ।
बुद्धिदायै नमः ।
सदात्मिकायै नमः ।
महाग्रहहरायै नमः ।
सौम्यायै नमः ।
विशोकायै नमः ।
शोकनाशिन्यै नमः ।
सात्विकायै नमः ।
सत्यसंस्थापनायै नमः ।
राजस्यै नमः ।
रजोवृतायै नमः ।
तामस्यै नमः ।
तमोयुक्तायै नमः ।
गुणत्रयविभागिन्यै नमः ।
अव्यक्तायै नमः ।
व्यक्तरूपायै नमः ।
वेदवेद्यायै नमः ।
शाम्भव्यै नमः ।
कालरूपिण्यै नमः ।
शङ्करकल्पायै नमः ।
महासङ्कल्पसन्तत्यै नमः ।
सर्वलोकमया शक्त्यै नमः ।
सर्वश्रवणगोचरायै नमः ।
सार्वज्ञवत्यै नमः ।
वाञ्छितफलदायिन्यै नमः ।
सर्वतत्वप्रबोधिन्यै नमः ।
जाग्रतायै नमः ।
सुषुप्तायै नमः ।

स्वप्नावस्थायै नमः ।
चतुर्युगायै नमः ।
चत्वरायै नमः ।
मन्दायै नमः ।
मन्दगत्यै नमः ।
मदिरामोदमोदिन्यै नमः ।
पानप्रियायै नमः ।
पानपात्रधरायै नमः ।
पानदानकरोद्यतायै नमः ।
विद्युद्वर्णायै नमः ।
अरुणनेत्रायै नमः ।
किञ्चिद्व्यक्तभाषिण्यै नमः ।
आशापूरिण्यै नमः ।
दीक्षायै नमः ।
दक्षायै नमः ।
जनपूजितायै नमः ।
नागवल्ल्यै नमः ।
नागकर्णिकायै नमः ।
भगिन्यै नमः ।
भोगिन्यै नमः ।
भोगवल्लभायै नमः ।
सर्वशास्त्रमयायै नमः ।
विद्यायै नमः ।
स्मृत्यै नमः ।
धर्मवादिन्यै नमः ।
श्रुतिस्मृतिधरायै नमः ।
ज्येष्ठायै नमः ।
श्रेष्ठायै नमः ।
पातालवासिन्यै नमः ।
मीमाम्सायै नमः ।
तर्कविद्यायै नमः ।
सुभक्त्यै नमः ।

भक्तवत्सलायै नमः ।
सुनाभायै नमः ।
यातनालिस्यै नमः ।
गम्भीरभारवर्जितायै नमः ।
नागपाशधरायै नमः ।
सुमूर्त्यै नमः ।
अगाधायै नमः ।
नागकुण्डलायै नमः ।
सुचक्रायै नमः ।
चक्रमध्यस्थितायै नमः ।
चक्रकोणनिवासिन्यै नमः ।
जलदेवतायै नमः ।
महामार्यै नमः ।
श्री सरस्वत्यै नमः ॥ॐ॥

॥अथ नवमदिनस्य वागीश्वरी पूजाविधिः ॥

ॐ अस्यश्री वागीश्वरी महामन्त्रस्य कण्व ऋषिः विराट्
छन्दः श्री वागीश्वरी देवता ॥

[ ॐ वद - वद - वाक् - वादिनि - स्वाहा ] एवं
पंचाङ्गन्यासमेव समाचरेत् ॥

ध्यानम्
अमलकमलसंस्था लेखनीपुस्तकोद्यत्करयुगलसरोजा
कुन्दमन्दारगौरा ।
धृतशशधरखण्डोल्लासिकोटीरचूडा भवतु भवभयानां
भङ्गिनी भारती नः ॥

मन्त्रः - ॐ वद वद वाग्वादिनि स्वाहा ॥

॥अथ वाग्वादिन्याः नामावलिः॥

ॐ वागीश्वर्यै नमः ।
सर्वमन्त्रमयायै नमः ।
विद्यायै नमः ।

सर्वमन्त्राक्षरमयायै नमः ।
वरायै नमः ।
मधुस्रवायै नमः ।
श्रवणायै नमः ।
भ्रामर्यै नमः ।
भ्रमरालयायै नमः ।
मातृमण्डलमध्यस्थायै नमः ।
मातृमण्डलवासिन्यै नमः ।
कुमारजनन्यै नमः ।
क्रूरायै नमः ।
सुमुख्यै नमः ।
ज्वरनाशिन्यै नमः ।
अतीतायै नमः ।
विद्यमानायै नमः ।
भाविन्यै नमः ।
प्रीतिमन्दिरायै नमः ।
सर्वसौख्यदात्र्यै नमः ।
अतिशक्तायै नमः ।
आहारपरिणामिन्यै नमः ।
निदानायै नमः ।
पञ्चभूतस्वरूपायै नमः ।
भवसागरतारिण्यै नमः ।
अर्भकायै नमः ।
कालभवायै नमः ।
कालवर्तिन्यै नमः ।
कलङ्करहितायै नमः ।
हरिस्वरूपायै नमः ।
चतुःषष्ट्यभ्युदयदायिन्यै नमः ।
जीर्णायै नमः ।
जीर्णवस्त्रायै नमः ।
कृतकेतनायै नमः ।
हरिवल्लभायै नमः ।

अक्षरस्वरूपायै नमः ।
रतिप्रीत्यै नमः ।
रतिरागविवर्धिन्यै नमः ।
पञ्चपातकहरायै नमः ।
भिन्नायै नमः ।
पञ्चश्रेष्ठायै नमः ।
आशाधारायै नमः ।
पऽचवित्तवातायै नमः ।
पङ्क्तिस्वरूपिण्यै नमः ।
पञ्चस्थानविभाविन्यै नमः ।
उदक्यायै नमः ।
व्रिषभाङ्कायै नमः ।
त्रिमूर्त्यै नमः ।
धूम्रकृत्यै नमः ।
प्रस्रवणायै नमः ।
बहिःस्थितायै नमः ।
रजसे नमः ।
शुक्लायै नमः ।
धराशक्त्यै नमः ।
जरायुषायै नमः ।
गर्भधारिण्यै नमः ।
त्रिकालज्ञायै नमः ।
त्रिलिङ्गायै नमः ।
त्रिमूर्त्यै नमः ।
पुरवासिन्यै नमः ।
अरागायै नमः ।
परकामतत्वायै नमः ।
रागिण्यै नमः ।
प्राच्यावाच्यायै नमः ।
प्रतीच्यायै नमः ।
उदीच्यायै नमः ।
उदग्दिशायै नमः ।

अहङ्कारात्मिकायै नमः ।
अहङ्कारायै नमः ।
बालवामायै नमः ।
प्रियायै नमः ।
स्रुक्स्रवायै नमः ।
समिध्यै नमः ।
सुश्रद्धायै नमः ।
श्राद्धदेवतायै नमः ।
मात्रे नमः ।
मातामह्यै नमः ।
तृप्तिरूपायै नमः ।
पितृमात्रे नमः ।
पितामह्यै नमः ।
स्नुषादायै नमः ।
दौहित्रदायै नमः ।
नादिन्यै नमः ।
पुत्र्यै नमः ।
श्वसायै श्रियायै नमः ।
स्तनदायै नमः ।
स्तनधरायै नमः ।
विश्वयोन्यै नमः ।
स्तनप्रदायै नमः ।
शिशुरूपायै नमः ।
सङ्गरूपायै नमः ।
लोकपालिन्यै नमः ।
नन्दिन्यै नमः ।
खट्वाङ्गधारिण्यै नमः ।
सखड्गायै नमः ।
सबाणायै नमः ।
भानुवर्तिन्यै नमः ।
विरुद्धाक्ष्यै नमः ।
महिषासृक्प्रियायै नमः ।

कौशिक्यै नमः ।
उमायै नमः ।
शाकम्भर्यै नमः ।
श्वेतायै नमः ।
कृष्णायै नमः ।
कैटभनाशिन्यै नमः ।
हिरण्याक्ष्यै नमः ।
शुभलक्षणायै नमः ॥ॐ॥

एवं तद्दिन दुर्गां समाराध्य यथा शक्ति
कुमारीपूजां ब्राह्मणसुवासिनीभ्यः
उपायनदानान्नदानादिकं च कृत्वा नवरात्रव्रतं
समापयेत् ॥

जय जय शङ्कर !
ॐ श्री ललिता महात्रिपुरसुन्दरी पराभट्टारिका समेताय
श्री चन्द्रमौळीश्वर परब्रह्मणे नमः !

॥ इति हर्षानन्दनाथकृत कल्पोक्त
नवदुर्गापूजाविधेः सङ्ग्रहः ॥ ॥ शिवम् ॥

Encoded by R. Harshananda harshanand_16@rediffmail.com

.. kalpokta navadurgApUjAvidhiH ..
was typeset on August 12, 2016



